# वैद्यनाथ स्तोत्र संग्रह

ज्योतिर्लिङ्ग बाबा बैद्यनाथ के प्रमुख स्तोत्र

***श्रीवैद्यनाथाय नमः***

# Essence Of Astrology

*- By Lokesh Agrawal*

संस्करण : १.०
चैत्र कृष्ण द्वितीया २०८० विक्रम सम्वत

# ॥ श्रीवैद्यनाथ स्तोत्र ॥

वेदवेद्य कृपाधार जगन्मूर्ते शुभप्रद ।
अनादिवैद्यसर्वज्ञ नमस्ते भक्तवत्सल ॥
सर्वलोकमहेशान कलिपापप्रणाशन ।
त्रिगुणाकार चिद्रूप ज्ञानदायक ते नमः ॥

क्षुद्रपीडावतां नणां कलौ त्वत्सेविनां शिव ।
समस्त रोगसंहर्त्रे भवरोगहराय च ॥
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं दयानिधे ।
स्तोत्रेणानेन सुप्रीता वैद्यनाथो महेश्वरः ॥

(वैद्यनाथस्थलमाहात्म्यम् से लोकेश अग्रवाल द्वारा संकलित)

# ॥ वैद्यनाथाष्टकम् ॥

श्रीराम सौमित्रि जटायुवेद
षडाननादित्य कुजार्चिताय ।
श्रीनीलकण्ठाय दयामयाय
श्रीवैद्यनाथाय नमःशिवाय ॥१॥

गङ्गाप्रवाहेन्दु जटाधराय
त्रिलोचनाय स्मर कालहन्त्रे ।
समस्त देवैरभिपूजिताय
श्रीवैद्यनाथाय नमः शिवाय ॥२॥

भक्तःप्रियाय त्रिपुरान्तकाय

पिनाकिने दुष्टहराय नित्यम् ।
प्रत्यक्षलीलाय मनुष्यलोके
श्रीवैद्यनाथाय नमः शिवाय ॥३॥

प्रभूतवातादि समस्तरोग
प्रनाशकर्त्रे मुनिवन्दिताय ।
प्रभाकरेन्द्वग्नि विलोचनाय
श्रीवैद्यनाथाय नमः शिवाय ॥४॥

वाक् श्रोत्र नेत्राङ्घ्रि विहीनजन्तोः
वाक्श्रोत्रनेत्रांघ्रिसुखप्रदाय ।
कुष्ठादिसर्वोन्नतरोगहन्त्रे

श्रीवैद्यनाथाय नमः शिवाय ॥५॥

वेदान्तवेद्याय जगन्मयाय
योगीश्वरध्येय पदाम्बुजाय ।
त्रिमूर्तिरूपाय सहस्रनाम्ने
श्रीवैद्यनाथाय नमः शिवाय ॥६॥

स्वतीर्थमृद्भस्मभृताङ्गभाजां
पिशाचदुःखार्तिभयापहाय ।
आत्मस्वरूपाय शरीरभाजां
श्रीवैद्यनाथाय नमः शिवाय ॥७॥

श्रीनीलकण्ठाय वृषध्वजाय

स्रक्गन्ध भस्माद्यभिशोभिताय ।

सुपुत्रदारादि सुभाग्यदाय

श्रीवैद्यनाथाय नमः शिवाय ॥८॥

वालाम्बिकेश वैद्येश

भवरोगहरेति च ।

जपेन्नामत्रयं नित्यं

महारोगनिवारणम् ॥९॥

॥ इति श्री वैद्यनाथाष्टकम् ॥

# ॥ श्रीवैद्यनाथस्तोत्रम् ॥

अचिकित्सचिकित्साय आद्यन्तरहिताय च ।
सर्वलोकैकवन्द्याय वैद्यनाथाय ते नमः ॥१॥

अप्रेमेयाय महते सुप्रसन्नमुखाय च ।
अभीष्टदायिने नित्यं वैद्यनाथाय ते नमः ॥२॥

मृत्युञ्जयाय शर्वाय मृडानीवामभागिने ।
वेदवेद्याय रुद्राय वैद्यनाथाय ते नमः ॥३॥

श्रीरामभद्रवन्द्याय जगतां हितकारिणे ।
सोमार्धधारिणे नित्यं वैद्यनाथाय ते नमः ॥४॥

नीलकण्ठाय सौमित्रिपूजिताय मृडाय च ।
चन्द्रवह्न्यर्कनेत्राय वैद्यनाथाय ते नमः ॥५॥

शिखिवाहनवन्द्याय सृष्टिस्थित्यन्तकारिणे ।
मणिमन्त्रौषधीशाय वैद्यनाथाय ते नमः ॥६॥

गृध्रराजाभिवन्द्याय दिव्यगङ्गाधराय च ।
जगन्मयाय शर्वाय वैद्यनाथाय ते नमः ॥७॥

कुजवेदविधीन्द्राद्यैः पूजिताय चिदात्मने ।
आदित्यचन्द्रवन्द्याय वैद्यनाथाय ते नमः ॥८॥

वेदवेद्य कृपाधार जगन्मूर्ते शुभप्रद ।
अनादिवैद्य सर्वज्ञ वैद्यनाथ नमोऽस्तु ते ॥९॥

गङ्गाधर महादेव चन्द्रवह्न्यर्कलोचन ।
पिनाकपाणे विश्वेश वैद्यनाथ नमोऽस्तु ते ॥१०॥

वृषवाहन देवेश अचिकित्सचिकित्सक ।
करुणाकर गौरीश वैद्यनाथ नमोऽस्तु ते ॥११॥

विधिविष्णुमुखैर्देवैरर्च्यमानपदाम्बुज ।
अप्रमेय हरेशान वैद्यनाथ नमोऽस्तु ते ॥१२॥
रामलक्ष्मणसूर्येन्दुजटायुश्रुतिपूजित ।
मदनान्तक सर्वेश वैद्यनाथ नमोऽस्तु ते ॥१३॥
प्रपञ्चभिषगीशान नीलकण्ठ महेश्वर ।
विश्वनाथ महादेव वैद्यनाथ नमोऽस्तु ते ॥१४॥
उमापते लोकनाथ मणिमन्त्रौषधेश्वर ।
दीनबन्धो दयासिन्धो वैद्यनाथ नमोऽस्तु ते ॥१५॥
त्रिगुणातीत चिद्रूप तापत्रयविमोचन ।
विरूपाक्ष जगन्नाथ वैद्यनाथ नमोऽस्तु ते ॥१६॥
भूतप्रेतपिशाचादेरुच्चाटनविचक्षण ।
कुष्ठादिसर्वरोगाणां संहर्त्रे ते नमो नमः ॥१७॥

जाड्यन्धकुब्जादेर्दिव्यरूपप्रदायिने ।
अनेकमूकजन्तूनां दिव्यवाग्दायिने नमः ॥१८॥
इति श्रीवैद्यनाथस्तोत्रं सम्पूर्णम् ।

# ॥ श्रीवैद्यनाथस्तुति ॥

रक्ष रक्ष महादेव दीनरक्षैकदीक्षित ।

त्राहि मां त्राहि मां शम्भो स्वामिन् स्त्वत्पदसेवनम् ॥

आद्यन्तरहितेशान वेदवेद्य जगत्पते ।

अनादिवैद्य सर्वज्ञ वैद्यनाथ नमोऽस्तु ते ॥

गङ्गाधर महादेव चन्द्रवर्कलाचन ।

पिनाकपाणे विश्वेश वैधनाथ नमोऽस्तु ते ॥

वृषवाहन देवेश अचिकित्मा चिकित्सकः ।

करुणाकर गौरीश वैद्यनाथ नमोऽस्तु ते ॥

विधिविष्णुमुखैर्देवैरर्च्यमानपदाम्बुजः ।

अप्रमेय हरेशान वैद्यनाथ नमोऽस्तु ते ॥

रामलक्ष्मण सूर्येन्दु जटायुः श्रुतिपूजित ।

मदनान्तक सर्वेशं वैद्यनाथ नमोऽस्तु ते ॥

प्रपञ्चभिषगीशान नीलकण्ठ महेश्वर ।

विश्वनाथ महादेव वैद्यनाथ नमोऽस्तु ते ॥

उमापते लोकनाथ मणिमन्त्रौषधेश्वर ।

दीनबन्धो दयासिन्धो वैद्यनाथ नमोऽस्तु ते ॥

त्रिगुणातीत चिद्रूप तापत्रय विमोचन ।

विरूपाक्ष जगन्नाथ वैद्यनाथ नमोऽस्तु ते ॥

भूतप्रेतपिशाचादेरुच्चाटन विचक्षण ।

कुष्ठादिसर्वरोगाणां संहर्त्रे ते नमो नमः ॥

जात्यन्धपङ्गुरोगादेः दिव्यरूपप्रदायिने ।

अनेकमूकजन्तूनां दिव्यवाकदायिने नमः ॥

(वैद्यनाथस्थलमाहात्म्यम् से लोकेश अग्रवाल द्वारा संकलित)

# ॥ अथ श्रीवैद्यनाथस्तवः ॥

वेदवेद्य कृपाधार जगन्मूर्त शुभप्रद ।
अनादिवैद्य सर्वज्ञ वैद्यनाथ नमोऽस्तु ते ॥१॥
गङ्गाधर महादेव चन्द्रवह्न्यर्कलोचन ।
पिनाकपाणे विश्वेश वैद्यनाथ नमोऽस्तु ते ॥२॥
वृषवाहन देवेश कचिकित्स चिकित्सक ।
करुणाकर गौरीश वैद्यनाथ नमोऽस्तु ते ॥३॥
विधिविष्णुमुखैर्देवैरर्च्यमानपदाम्बुज ।
अप्रमेय हरेशान वैद्यनाथ नमोऽस्तु ते ॥४॥
रामलक्ष्मणसूर्येन्दुजटायुः श्रुतिपूजित ।
मदनान्तक सर्वेश वैद्यनाथ नमोऽस्तु ते ॥५॥
प्रपञ्चभिषगीशान नीलकण्ठ महेश्वर ।

विश्वनाथ महादेव वैद्यनाथ नमोऽस्तु ते ॥६॥

उमापते लोकनाथ मणिमन्त्रौषधीश्वर ।

दीनबन्धो दयासिन्धो वैद्यनाथ नमोऽस्तु ते ॥७॥

त्रिगुणातीत चिद्र तापत्रयविमोचन ।

विरूपाक्ष जगन्नाथ वैद्यनाथ नमोऽस्तु ते ॥८॥

भूतप्रेतपिशाचादेरुच्चाटनविचक्षण ।

कुष्टादिसर्वरोगाणां संहर्त्रे ते नमो नमः ॥९॥

जात्यन्धपङ्गु कुब्जादेर्दिव्यरूपप्रदायिने ।

अनेक मूकजन्तूनां दिव्यवाग्दायिने नमः ॥१०॥

देवाः-

स्वामिन् सर्वजगान्नाथ सर्वरोगचिकित्सक ।

क्षुद्ररोगभयार्तान् नस्त्राहि त्राहि महाप्रभो ॥११॥

अचिकित्स्याचिकित्साय चाद्यन्तर हिताय च।
सर्वलोकैकवन्द्याय वैद्यनाथाय ते नमः ॥१२॥
अप्रमेयाय महते सुप्रसन्नमुखाय च ।
अभीष्टदायिने तुभ्यं वैद्यनाथाय ते नमः ॥१३॥
मृत्युञ्जयाय शर्वाय मृडानीवामभागिने ।
वेदवेद्याय रुद्राय वैद्यनाथाय ते नमः ॥१४॥
श्रीरामभद्रवन्द्याय जगतां हितकारिणे ।
सोमार्धधारिणे तुभ्यं वैद्यनाथाय ते नमः ॥१५॥
श्रीनीलकण्ठाय सौमित्रिपूजिताय मृडाय च ।
चन्द्रवह्नयर्कनेत्राय वैद्यनाथाय ते नमः ॥१६॥
शिखिवाहनवन्द्याय सृष्टिस्थित्यन्तकारिणे ।
मणिमन्त्रौषधेशाय वैद्यनाथाय ते नमः ॥१७॥

गृध्रराजाभिवन्द्याय दिव्यगङ्गाधराय च ।
जगन्नाथाय सर्वाय वैद्यनाथाय ते नमः ॥१८॥

कुज वेदविधीन्द्राद्यैः पूजिताय चिदात्मने ।
आदित्यचन्द्रवन्द्याय वैद्यनाथाय ते नमः ॥१९॥

॥ इति श्रीवैद्यनाथस्तवः सम्पूर्णः ॥

# ॥ श्रीवैद्यनाथ स्तुति ॥

वैद्यनाथेति नाम्ना प्रसिद्धं क्षितौ,
रावणेनाहृतं विष्णुना स्थापितम् ।
श्रीसती-हृदयतः सर्व-सत्कामना-पूरकं
ज्योतिषो लिङ्गमीशं भजे ।।१।।

नन्दि-नाम्नो वृषान् उत्तरस्यां स्थितान्,
द्वारतो भूतपान् भूत-सङ्घावृतान् ।
आशु-तोषोद्-वहान्कृष्ट-मूर्ध्नाऽन्वितान्,
शक्तिभिः संयुक्तान् नौमि सत् - प्रीतये ।।२।।

वाम-हस्त-द्वये खड्ग-मुण्डौ गले,

मुण्ड-मालां कटौ छिन्न-हस्ताम्बरम् ।
धारयन्तीं चितास्थे शिवेऽवस्थिताम्,
आदि-शक्तिं नुमो दक्षिणां कालिकाम् ।।३।।

राजते नाथ! हस्तेन युग्मेन या,
दक्षिणेनार्पयत्येव भक्तादये।
काम - पूरं तथाऽभीतिमन्तर्गता,
रोषिता लेढि विश्वं च या लीलया ।।४।।

यैक-हस्त-स्थितादन्न-पात्रात् परेणाहृतम्,
प्राणिने भोज्य-जातं मुदा ।
अर्पयन्ती जगत् पालयत्यादरात्,

अन्नपूर्णा शिवां तामहं चिन्तये ।।५।।

चरण-समीपेऽन्योन्य-मुख-स्थित-लक्ष्मी-वाणीभ्यां,
स्तूयमानमरविन्द-गदा-शङ्खार-युतं वैकुण्ठेशम् ।
नारद-तुम्बुरु-जय-विजयारुण-पूर्व-जनैः,
सहितं नारायणमनु-सेवे त्रिधाऽवस्थितं देवेशम् ।।६।।

नील-कण्ठं शिवं सौरि-शुक्रान्वितम्,
पार्वती-विष्णु-धामान्तरे संस्थितम् ।
शत्रु-संहारकं भक्ति-सन्दायकम्,
देव-सङ्घ-स्तुतं भावये सन्ततम् ।।७।।

विश्व-सृष्टि-स्थिति-ध्वंस-कर्त्री शिवाम्,
योगिनी-योगिनीं श्रीमतीमम्बिकाम्।
वैद्यनाथेश्वरीं पुरीं सुन्दरीम्,
दुर्ग - संहारिणीं चाश्रये सर्वदा ।।८।।

अन्तरा स्थाप्य भैरो - कुलोपासिता,
याऽऽत्मजं कार्तिकेयं स्वयं चाग्रतः ।
द्योतते तामहं कष्ट संहारिणीम्,
संयुतामाश्रये श्रीजगन्मातरम् ।।९।।

श्रीगणेशं सदैवर्धि-सिद्धि-द्वयेनान्वितम्,
खर्व - कायं भवानी - सुतम् ।

मूषकावस्थितं हस्ति - मुण्डाननम्,
अष्ट- बाहुं नुमः सर्व विघ्नच्छिदम् ।।१०।।

श्रीचतुर्वक्त्रमीशं जगत्-कारणम्,
राज-हंस-ध्वजं वेद-विद्योतितम् ।
वेद-मातुः पतिं नारदादि-स्तुतम्,
वेधसं नौमि मूर्धा स-कूर्चं विभुम् ।।११।।

सर्व-सन्ध्यासु सद्भिर्द्विजैरर्चिताम्,
जायतां त्राण-कार्यङ्करीमम्बिकाम् ।
सर्व - वेद - प्रसूं सर्व - बुद्धि प्रदाम्,
सूर्य-गोल-स्थितां नौमि सन्ध्यां शिवाम् ।।१२।।

यस्य दक्षेऽस्फुटो बालको भैरवो,
राजते भैरवः काल - पूर्वोद्यमम् ।
यज्ञ - सूत्री सदा शाम्भवे दर्शने,
विघ्न बाधा - हरो नम्यतेऽहर्निशम् ।।१३।।

एकतोऽवस्थितं श्रीकुबेरेश्वरम्,
लिङ्ग रूपे स्थितं शङ्करं सद् - गुरुम् ।
तत् प्रतीच्यां स्थितं राम भक्तं
हनूमन्तमीशावतारं भजे वानरम् ।।१४।।

या जरुत् - कारु - नाम्नो मुनेः सेवया,

पुत्रमास्तीकमासाद्य नागान् पपौ ।
सर्प - यज्ञान् महोग्रात् पारीक्षितात्,
तां विषघ्नीं भजे शम्भु-शिष्यां सतीम् ।।१५।।

चन्द्र - कुन्दाभ - रूपं वहन्तीं शुभाम्,
वादयन्तीं विपञ्चीं बुधोत्पादिकाम् ।
शुभ्र - वासो - धरां श्वेत - हंसासनाम्,
शारदां नौमि निश्शेष - जाड्यापहाम् ।।१६।।

एक-चक्रे रथेऽनुरुणा संयते,
बद्ध पद्मासनं बाल खिल्यैः स्तुतम् ।
नाशयन्तं तम - स्तोम - मन्त्रैर्जगद्-भासयन्तं

तमीडे विभुं भास्करम् ।।१७।।

श्रीराधा- तुलसी निजां सहचरीं कृष्णेन सम्मर्दिताम् ।
आलोक्य स्फुरिताधराऽशपदरी "मर्त्ये क्षुपस्त्वं भव ।।"
स्वीकृत्यैतनहो हठात् क्षिति-तले या वृक्ष-भावं गता ।
तां वृन्दां प्रणमामि भक्ति-लतिकां कृष्ण-प्रियामीश्वरीम्
।।१८।।

सागरे वै सुधायाः स्फुरद्-रत्न-भा-मण्डपे
रत्न - सिंहासने संस्थिताम् ।
शत्रु - संहारिणीं पीत - वस्त्रां शिवाम्,
वैद्यनाथेश्वरीं बागलीं चिन्तये ।।१९।।

केन-चित् कर्मणा स्वर्ण-बिल्व- द्रुमाम्,
प्राप्तवन्तं कुबेरं तु यो मुक्त - वान् ।
तत् – स्मृतिं स्वर्ण – बिल्वेश्वरं तं नुमो,
वैद्यनाथाङ्गनस्य प्रतीच्यां स्थितम् ।।२०।।

वैपणे वैद्यनाथस्य निम्ब द्रुमाध:
स्थिते मन्दिरे रासभाव - स्थिताम् ।
शूर्प - मस्तां करे मार्जनी - धारिणीम्,
शीतलां नौमि स्व-व्याधि-संहारिणीम् ।।२१।।

आपदां हारकं सम्पदां दायकम्,
रावणारिं सुरेशं शिवेज्यं विभुम् ।

वामतः सीतया दक्षतो लक्ष्मणे -
नान्वितं रामचन्द्रं सदा संश्रये ।।२२।।

विष्णु - पादात् परिभ्रश्य मन्दाकिनी,
शम्भु शीर्णो निपत्याथ भागीरथी ।
पर्वतेशात् पतित्वा च पातालिनी,
जाह्नवी सा मया सर्वदा वन्द्यते ।।२३।।

नाग यज्ञोपवीतेन सम्भूषितो,
दण्ड पाणिः सदा शङ्करानु - व्रतः ।
बद्ध पद्मासनो विघ्नहा भैरवः,
सर्वथाऽऽनन्द - पूर्वो मया नम्यते ।।२४।।

यो निजाङ्के समावेश्य गौरीं निजाम्,
शङ्करो राजते रक्त - गौरच्छविः ।
शक्ति-हीनः पुमान् पुं-विहीना च सा,
नैव किञ्चित्-करीत्यादिशन् वन्द्यताम् ।।२५।।

नर्मदा - सम्भवं नर्मदेशं विभुम्,
वैद्यनाथ- प्रभं नन्दिना संयुतम् ।
मन्दिरादुत्तरे दिग्-विभागे स्थितम्,
सर्वदा नौमि शक्त्याऽनिशं सङ्गतम् ।।२६।।

प्रज्वलन्त्यां चितायां प्रसुप्ते शिवेऽक्षोभ्य-रूपे
स्थितां लम्बमान- स्तनीम्।

तारिणीं नौमि हस्तैः कपालाम्बुजे,
कर्तृकासी दधानां जगन्मातरम् ।।२७।।

उदीयमानार्क - रुचं सुधांशुना,
प्रोद्भासि - भालां सु- समुन्नत - स्तनीम् ।
पाशांकुशाभीति वरान् दधानाम्,
भजे त्रिनेत्रां भुवनेश्वरीं शिवाम् ।।२८।।

गजैश्चतुर्भिः कलशैः सुधाढ्यैः,
संसिच्यमानां कमलासनां रमाम् ।
भुजैश्चतुर्भिः निधि-पाश-शङ्खांकुशान्,
दधानाम् प्रणमामि लक्ष्मीम् ।।२९।।

नादैर्गभीरैर्दितिजान् समस्तान्,
विद्रावयन्तीं सु - विशाल रूपाम् ।
प्रत्यूह - हन्त्रीं सुर - पूजनेऽनिशम्,
घण्टामवाच्यां दिशि संस्थितां नुमः ।।३०।।

चक्रं सुदर्शनमथो शिव-मुख्य-शस्त्रम्,
श्रीवैद्यनाथ-भवनाच्छुशि दिग्विवर्ति ।
जालन्धरस्य शिरसो विनिकर्तृ वन्दे,
वृन्दा-पतेर्लवण - सागर - सम्भवस्य ।।३१।।
द्वा-त्रिंशता प्रसूनैः समर्पितैः पाद-पद्मयोः प्रीत्या ।
प्रीणातु वैद्यनाथ: स - गणः उमेशेन भृत्येन ।। ३२।।